# ॥ श्रीराममङ्गलशासनम् ॥

मङ्गलं कौशलेन्द्राय महनीयगुणाब्धये ।
चक्रवर्तितनूजाय सार्वभौमाय मङ्गलम् ॥ १॥

वेदवेदान्तवेद्याय मेघश्यामलमूर्तये ।
पुंसां मोहनरूपाय पुण्यश्लोकाय मङ्गलम् ॥ २॥

विश्वामित्रान्तरङ्गाय मिथिलानगरीपतेः ।
भाग्यानां परिपाकाय भव्यरूपाय मङ्गलम् ॥ ३॥

पितृभक्ताय सततं भ्रातृभिः सह सीतया ।
नन्दिताखिललोकाय रामभद्राय मङ्गलम् ॥ ४॥

त्यक्तसाकेतवासाय चित्रकूटविहारिणे ।
सेव्याय सर्वयमिनां धीरोदयाय मङ्गलम् ॥ ५॥

सौमित्रिणा च जानक्या चापबाणसिधारिणे ।
संसेव्याय सदा भक्त्या स्वामिने मम मङ्गलम् ॥ ६॥

दण्डकारायवासाय खरदूषणशत्रवे ।
गृध्रराजाय भक्ताय मुक्तिदायास्तु मङ्गलम् ॥ ७॥

सादरं शबरीदत्तफलमूलाभिलाषिणे ।
सौलभ्यपरिपूर्णाय सत्त्वोद्रिक्ताय मङ्गलम् ॥ ८॥

हनुमत्समवेताय हरीशाभीष्टदायिने ।
बालिप्रमथानायास्तु महाधीराय मङ्गलम् ॥ ९॥

श्रीमते रघुवीराय सेतूल्लङ्घितसिन्धवे ।
जितराक्षसराजाय रणधीराय मङ्गलम् ॥ १०॥

विभीषणकृते प्रीत्या लङ्काभीष्टप्रदायिने ।
सर्वलोकशरण्याय श्रीराघवाय मङ्गलम् ॥ ११॥

आसाद्य नगरीं दिव्यामभिषिक्ताय सीतया ।
राजाधिराजराजाय रामभद्राय मङ्गलम् ॥ १२॥

ब्रह्मादिदेवसेव्याय ब्रह्मण्याय महात्मने ।
जानकीप्राणनाथाय रघुनाथाय मङ्गलम् ॥ १३॥

श्रीसौम्यजामातृमुनेः कृपयास्मानुपेयुषे ।
महते मम नाथाय रघुनाथाय मङ्गलम् ॥ १४॥

मङ्गलाशासनपरिर्मदाचार्यपुरोगमैः ।
सर्वैश्च पूर्वैराचार्यः सत्कृतायास्तु मङ्गलम् ॥ १५॥

रम्यजामातृमुनिना मङ्गलाशासनं कृतम् ।
त्रैलोक्याधिपतिः श्रीमान् करोतु मङ्गलं सदा ॥ १६॥

॥ इति श्रीवरवरमुनिस्वामिकृतश्रीराममङ्गलाशासनं सम्पूर्णम् ॥